॥ श्रीराम ॥

श्रीमत्

# अभिनवतालमंजरी।

पं० अपातुलस्युपाख्यकाशीनाथप्रणीता।

साच

मुंबय्यां

विष्णुशर्मणा

निर्णयसागरयंत्रालये कोलभाटवीथ्यां नं. २३, रा. ये. शेडगे-
द्वारा मुद्राक्षरैरंकयित्वा प्राकाश्यं नीता।

शाके १८३५. सन १९१४.

॥ श्रीराम ॥

श्रीमत्

# अभिनवतालमंजरी ।

पं० अपातुलस्युपाख्यकाशीनाथप्रणीता ।

साच

मुंबय्यां

विष्णुशर्मणा

निर्णयसागरयंत्रालये कोलभाटवीथ्यां नं. २३, रा. ये. शेडगे-
द्वारा मुद्राक्षरैरंकयित्वा प्राकाश्यं नीता ।

शके १८३५. सन १९१४.

॥ श्रीराम ॥

# श्रीमत्
# अभिनवतालमंजरी.

श्रीर्वामेऽवनिजा पुरः कपिवरः पृष्ठे सुमित्रासुतः
शत्रुघ्नो भरतश्च पार्श्वदलयोरग्न्यादिकोणेषु च ।
सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जांबवा-
न्मध्ये नीलमणिप्रभासुरुचिरं श्रीरामचंद्रं भजे ॥ १ ॥
स्वस्ति श्रीवैद्यनाथाधिवसतिपरळीक्षेत्रवासी द्विजाग्र्यः
श्रीरामो जामदग्न्यस्तुलसिकुलभवस्तत्सुतः काशिनाथः ।
देशीतालस्वरूपं प्रचलितमुदगालोच्य शास्त्रान्वयं च
तत्तत्तालाभिधाभिः प्रकटयति समीकृत्य तल्लक्षणानि ॥ २ ॥
तालाः सांप्रतमत्र ये प्रचलिता लोकेषु सर्वेपि ते
शास्त्रोक्ताः खलु संति तत्र विदुषां नास्त्येव हि द्वापरः ।
व्यत्यासस्तु लघुद्रुतादिषु तदंगेषु कचिद्दृश्यते
युक्तं तत्परिवर्त्तनं हि नियतं सर्वेषु भावेष्विह ॥ ३ ॥
लघुद्रुताद्यंगविपर्ययस्तु प्रस्तारतो जायत एव नित्यम् ।
इतीह तालांगविपर्ययेस्मिन्न विप्रपत्तिः प्रमितौ समायाम् ॥४॥

उद्देशोयम्

एकतालो दादरा च त्रिपुटो रूपकस्तथा ।
धुमाळिरेकतालश्च झंपा शूलश्च रुद्रकः ॥ १ ॥
चतुस्तालो विश्वतालो धमारो झूम्र इत्यपि ।
दीपचंदी चाड्डपूर्वश्चतुस्तालः सवार्यथ ॥ २ ॥
त्रितालो विष्णुतालश्च पुराणः शेष एव च ।
विजयश्च गणेशश्च श्रुतिर्वै मागधस्तथा ॥ ३ ॥

ब्रह्मतालश्चेति ताला देशीयाः पंचविंशतिः ।
कथितास्तालमंजर्यामस्यामेवमनुक्रमात् ॥ ४ ॥

एषामेव रत्नाकरप्रसिद्धनामानि

वक्ष्ये रत्नाकरीयाख्यास्तत्रादावेकतालिका ।
यतिलग्नोंतरक्रीडस्तृतीयः प्रतितालकः ॥ १ ॥
झंपा तथाड्डताली च चतुर्थो रुद्र एव च ।
ततो वर्णयतिः प्रोक्तः समतालस्तथैव च ॥ २ ॥
चंडश्च राजमार्तंडस्तद्भेदश्च तथापरः ।
चतुस्तालो गजझंपो राजविद्याधरस्तथा ॥ ३ ॥
प्रतापशेखरो लीला रागवर्धन इत्यपि ।
मुकुंदमल्लमठिका मागधश्च चतुर्मुखः ॥ ४ ॥

इति

एकतालः

यस्त्वेकताल इह सर्वजनप्रसिद्धो
भाषासु संप्रचलति द्विकलप्रमाणः ।
रत्नाकरे निगदितः स किलैकताली-
त्याख्यो द्रुतप्रमित एकनिघातशाली ॥ १ ॥

दादरा

भाषायामिह दादरेति विदितस्तालोस्ति यः षट्कलः
स स्पष्टं यतिलग्न इत्यभिधया रत्नाकरे वर्तते ।
पूर्वं यत्र नभस्ततश्च सरलो द्वावेव घातौ स्मृतौ
गीतेषु प्रचलत्सु योतिमधुरं मार्दंगिकैर्वाद्यते ॥ २ ॥

त्रिपुटा

तालो यस्तेवरेति त्रिपुट इति च यो देशभाषाप्रसिद्धो
ग्रंथे रत्नाकरेसौ सुमतिभिरुदितोस्त्यंतरक्रीडसंज्ञः ।
सप्तामुष्मिन्कलाः स्युः स्फुटमिह दविरामस्ततो दद्वयं स्या-
द्घातास्त्वत्र त्रयो वै सुरुचिरमतिभिर्वाद्यते मंजुपाटैः ॥ ३ ॥

रूपकतालः

ताल: सप्तकलोत्र रूपक इति ख्यातोस्ति लोकेषु यः
शास्त्रेसौ कथितस्तृतीय इति निःशंकेन रत्नाकरे ।
निःशब्दद्रुततो द्रुतो द्रुतविरामोस्तीह घातद्वयं
गीतेषु प्रविलंबितद्रुतलयैः पाटैः कलं वाद्यते ॥ ४ ॥

धुमाळितालः

लोकेस्त्यष्टकलो धुमाळिरिति कव्वालीति यो विश्रुतः
शास्त्रे स प्रतिताल इत्यभिहितः संगीतरत्नाकरे ।
यत्र स्यात्प्रथमं द्रुतोथ च लघुः प्रोक्तः पुनश्च द्रुतो
घाताः स्युस्त्रय एव रंजयति हृद्गीतेष्वभंगादिषु ॥ ५ ॥

अंकतालः

लोके नातिप्रसिद्धो य इह नवकलश्चांकतालोभिदष्टः
शास्त्रे झंपेति नाम्ना प्रकटमभिहितः सूरिणा शार्ङ्गिणा सः ।
पूर्वं यत्र द्रुतः स्याल्लघुरथ दविरामश्च घातत्रयेण
संयुक्तो भाति गीतेषु हि सुनिपुणमार्दंगिकैर्वाद्यमानः ॥ ६ ॥

झंपा

जनेषु बहुविश्रुतो दशकलोत्र झंपेति यः
स शार्ङ्गिरचिते हि शास्त्र उदितोड्डुतालीति वै ।
द्रुतो द्रुतविरामकस्तदनु शब्दहीनो द्रुत-
स्ततो द्रुतविरामकोत्र कथितं निघातत्रयम् ॥ ७ ॥

शूलतालः

प्रख्यातः शूलसंज्ञो य इह दशकलः सर्वलोकेषु तालः
सोयं शास्त्रे चतुर्थः प्रकटमभिहितः सोढलस्यात्मजेन ।
आदावत्रैकमात्रस्तदनु निगदितश्चार्धमात्रः पुनर्लो
यस्मिन्घातत्रयं स्याद्तिरुचिरतरं वाद्यते तालविद्भिः ॥ ८ ॥

रुद्रतालः

तालश्चैकादशकल इह प्रोच्यते रुद्रसंज्ञः
प्रोक्तः पूर्वं द्रुत इह ततश्चाणुयुग्मं ततो दः ।

तस्माच्चाणुत्रयमथ पुनः स्याद्दृतोष्टौ निघाता
नृत्ये गीते निपुणमतयो योजयंत्येनमार्याः ॥ ९ ॥

चौतालः

चतुस्तालो लोके विदित इह यो द्वादशकलः
स शास्त्रेप्युक्तो वर्णयतिरिति निःशंकसुधिया ।
लघू यत्रादौ द्वौ तदनु कथितं तु द्रुतयुगं
निघाताश्चत्वारो ध्रुवपदनियुक्तो विजयते ॥ १० ॥

विश्वतालः

तालो विश्व इति त्रयोदशकलो नातिप्रसिद्धो जने
ग्रंथे स्वे समताल इत्यभिहितः श्रीशार्ङ्गदेवेन सः ।
यत्रादौ द्रुतयुग्ममीरितमतश्चाणुद्वयं दस्तत-
स्तस्मादर्धविधुत्रयं तदनु दः प्रोक्ताः प्रघाता नव ॥ ११ ॥

धमारतालः

भाषायां प्रथितश्चतुर्दशकलस्तालो धमाराभिधः
सोयं चंड इति स्वयं निगदितः श्रीशार्ङ्गदेवेन हि ।
साणू यत्र लघू ततो लघुरिति प्रोक्तं निघातत्रयं
वक्रश्चित्रविचित्रपाटगतिभिर्मार्दंगिकैर्वाद्यते ॥ १२ ॥

झूम्रा

तालोस्ति प्रथितश्चतुर्दशकलो झूम्रेति लोकेषु यो
मार्तंडः सहि राजपूर्व उदितः संगीतरत्नाकरे ।
यत्रादौ दविरामको निगदितस्तस्माल्लघुः स्यात्ततो
निःशब्दो दविरामको लघुरतः प्रोक्तं निघातत्रयम् ॥ १३ ॥

दीपचंदी

तालोन्यः कथितश्चतुर्दशकलो यो दीपचंदीति वै
पूर्वस्यैव हि भेद एष इति संस्पष्टं दरीदृश्यते ।
यत्रादौ दविराम एव हि ततः प्रोक्तो लघुः पूर्ववत्
निःशब्दो दविराम एव हि ततो बाणो निघातत्रयम् ॥ १४ ॥

अडाचौतालतालः

दृष्टोन्योपि जने चतुर्दशकलोड्डादिश्चतुस्तालको-
सौ रत्नाकर ईरितोस्ति च यथाभिख्यश्चतुस्तालकः ।
पूर्वं चात्र मतो द्रुतोथ लघवः प्रोक्तास्त्रयः सूरिभि-
र्ज्ञेयं घातचतुष्टयं सुमधुरं पाटैरभिश्रूयते ॥ १५ ॥

सवारी

सवारिरिति विश्रुतोस्ति दशपंच यस्मिन्कलाः
स एव गजझंप इत्यभिहितोस्ति रत्नाकरे ।
लघुर्गुरुरतः परं द्रुतविराम इत्याश्रुतं
त्रिवारमभिहन्यते सुमधुरोऽभिगीतेष्वयम् ॥ १६ ॥

त्रितालः

आबालं विदितोस्ति षोडशकलो व्याप्तस्त्रितालो जने
शास्त्रे चापि हि शार्ङ्गिणा निगदितोयं राजविद्याधरः ।
आदावत्र लघुः स्मृतोथ गुरुरभ्युक्तस्ततः स्याल्लघु-
र्घाताः स्युस्त्रय एव सर्वजगतः प्राणप्रियोसौ मतः ॥ १७ ॥

विष्णुतालः

तालो विष्णुरिहास्ति सप्तदशभिर्युक्तः कलाभिस्तु यः
शास्त्रेऽसौ कथितः प्रतापसहितो रत्नाकरे शेखरः ॥
ह्रस्वो दोथ लघुस्ततो द्रुतयुगं बिंदुर्विरामांतको
घातैः षड्भिरधिश्रितो विजयते गीतेषु पाटाश्रितः ॥ १८ ॥

पुराणतालः

तालश्चाष्टादशकल इह स्यात्पुराणः प्रसिद्धो
लीलासंज्ञो विलसति हि संगीतरत्नाकरे सः ।
वाणः पूर्वं द्रुत उत लघुर्द्वयं स्याल्लघुश्च
घातैः षड्भिर्विबुधहृदयं मोहयत्येष पाटैः ॥ १९ ॥

शेषतालः

एकोनविंशतिकलस्त्विह शेषतालो-
सौ रागवर्धन इति प्रकटो हि शास्त्रे ।

लौ दौ ततो लघुरथाणुरथ द्रुतोऽस्मिन्
स्याद्घातसप्तकमयं हि विचित्रपाटः ॥ २० ॥

विजयतालः

तालोस्ति विंशतिकलो विजयः प्रसिद्धः
शास्त्रे मुकुंद इति शाङ्गिकृतेऽभिगीतः ।
यस्मिन् गुरुर्द्रुतयुगं च ततो गुरुर्वै
घातैश्चतुर्भिरधिकां मुदमातनोति ॥ २१ ॥

गणेशतालः

अस्त्येकविंशतिकलो हि गणेशतालः
शास्त्रेषु मल्ल इति योभिहितः सुधीभिः ।
लोणुर्लघुस्त्वणुयुगं लघुरर्धचंद्राः
प्रोक्तास्त्रयो दविरतिर्दश चैव घाताः ॥ २२ ॥

श्रुतितालः

कला यत्र द्वाविंशतिरभिमता यः श्रुतिरिति
प्रसिद्धोसौ शास्त्रे भवति मठिकेति प्रकटितः ।
लघुः पूर्वं तस्माद्दयुगमथ लो दत्रयमथो
लघुः प्रोक्तं घाताष्टकमिह बुधैस्तालनिपुणैः ॥ २३ ॥

मागधतालः

मागधो विजयते लघुर्गुरुः स्याल्लघुर्द्रुतविरामदद्वयम् ।
घातषट्कमुदितं तथा त्रयोविंशतिर्निगदितास्तु तत्कलाः ॥ २४ ॥

ब्रह्मतालः

लोकेषु प्रथितोऽष्टविंशतिकलो यो ब्रह्मतालोऽस्ति वै
संप्रोक्तः स चतुर्मुखः सुमतिना श्रीशार्ङ्गदेवेन हि ।
वाणो दोथ लघुर्दयुग्ममथ लः स्याद्दत्रयं लः पुन-
र्घाताः स्युर्दश यत्र चित्रमधुरैः पाटैरसौ वाद्यते ॥ २५ ॥

एवं चोदक्प्रदेशे गुणिजनविदिताः संत्यसंख्याततालाः-
स्तेष्वेवातिप्रसिद्धाः कतिचिदिह यथाकर्णितास्तालविज्ञैः ।
तेषां संगीतरत्नाकरमिलितसमाख्याभिराख्याभियोगं
कृत्वा लक्ष्माणि मार्गं प्रचलितमनतिक्रम्य संदर्शितानि ॥२६॥

शकेऽर्णवगुणेभशीतकरसंमिते वत्सरे १८३४
प्रसिद्धपरिधाविनाम्नि शुचिशुद्धषष्ठ्यां कवौ ।
उदक्प्रथिततालकल्पतरुमंजरीयं मुदा
रघूत्तमपदांबुजे तुलसिमंजरीवार्पिता ॥ २७ ॥

| | तालनाम | तालांगम् | मात्राः | घाताः |
|---|---|---|---|---|
| १ | एकताल: | ० | २ | १ |
| २ | दादरा | ० । | ६ | २ |
| ३ | तेवरा | ० ० ० | ७ | ३ |
| ४ | रूपकताल: | ० ० ० | ७ | २ |
| ५ | धुमाळी | ० । ० | ८ | ३ |
| ६ | अंकताल: | ० । ० | ९ | ३ |
| ७ | झंपा | ० ० ० ० | १० | ३ |
| ८ | शूलताल: | । ० । | १० | ३ |
| ९ | रुद्रताल: | ०◡◡ ० ◡ ◡ ◡ ० | ११ | ८ |
| १० | चौताल: | । । ० ० | १२ | ४ |
| ११ | विश्वताल: | ००◡◡ ० ◡ ◡ ◡ ० | १३ | ९ |
| १२ | धमारताल: | । । । | १४ | ३ |
| १३ | झूम्रा | ० । ० । | १४ | ३ |
| १४ | दीपचंदी | ० । ० । | १४ | ३ |
| १५ | अड्डाचौताल: | ० । । । | १४ | ४ |
| १६ | सवारी | । ऽ ० | १५ | ३ |
| १७ | त्रिताल: | । ऽ । | १६ | ३ |
| १८ | विष्णुताल: | । ० । ० ० ० | १७ | ६ |
| १९ | पुराणताल: | । ० । ० ० । | १८ | ६ |
| २० | शेषताल: | ॥ ० ० । ◡ ० | १९ | ७ |
| २१ | विजयताल: | ऽ ० ० ऽ | २० | ४ |
| २२ | गणेशताल: | । ◡ । ◡ ◡ । ◡ ◡ ◡ ० | २१ | १० |
| २३ | श्रुतिताल: | । ० ० । ० ० ० । | २२ | ८ |
| २४ | मागधताल: | । ऽ । ० ० ० | २३ | ६ |
| २५ | ब्रह्मताल: | । ० । ० ० । ० ० ० । | २८ | १० |

॥ श्रीराम ॥

# अथ तालानां दश प्राणाः

नत्वा गणपतिं सांबं श्रीरामं मारुतिं गुरून् ।
तत्वज्ञानाय तालानां निगूढं लक्ष्म चक्ष्महे ॥ १ ॥
तालस्तलप्रतिष्ठायामिति धातोर्घञि स्मृतः ।
गीतं वाद्यं तथा नृत्यं यतस्ताले प्रतिष्ठितम् ॥ २ ॥
तकारः शंकरः प्रोक्तो लकारः पार्वती स्मृता ।
शिवशक्तिसमायोगात्ताल इत्यभिधीयते ॥ ३ ॥
सदाशिवो हरिर्ब्रह्मा भरतः कश्यपो मुनिः ।
दुर्गा शक्तिर्मतंगश्च यास्कशार्दूलकोहलाः ॥ ४ ॥
हनूमानंगदश्चैव नारदस्तुंबुरुस्तथा ।
एते संगीतसर्वज्ञा बुधास्तालान्प्रचक्रमुः ॥ ५ ॥
तौर्यत्रिकं तु मत्तेभस्तालं तस्यांकुशं विदुः ।
न्यूनाधिकप्रमाणं तत्प्रमाणं क्रियते यतः ॥ ६ ॥
कालमार्गक्रियांगानि ग्रहजातिकलालयाः ।
यतिप्रस्तारकौ चेति तालप्राणा दश स्मृताः ॥ ७ ॥
तस्मादत्र दश प्राणाः प्रदर्श्यंते क्रमादिह ॥
तालतत्वपरिज्ञानकारणं तत्प्रदर्शनम् ॥ ८ ॥

अथ कालः

हस्तद्वयस्य संयोगे वियोगे चापि सर्वदा ।
व्याप्तिमान्यः समादिष्टः स कालस्तालसंज्ञकः ॥ ९ ॥
कालस्ताल इति प्रोक्तोऽत्राण्वादिक्रियया मितः ।
गीतादेः संमितिं कुर्वन्मार्गो देशीति स द्विधा ॥ १० ॥

क्षणादिरूपो यः कालः स तून्नेतुं न शक्यते ।
अणुद्रुतादिरूपस्तु कालस्तालोत्र कथ्यते ॥ ११ ॥
उपर्युपरि विन्यस्य पद्मपत्रशतं सकृत् ।
सूच्यग्रतस्तत्संभेदे यः कालः स क्षणः स्मृतः ॥ १२ ॥
लवः क्षणैरष्टभिः स्यात्काष्ठा स्यादष्टभिर्लवैः ।
अष्टकाष्ठा निमेषः स्यान्निमेषैरष्टभिः कला ॥ १३ ॥
कलाद्वयाच्चतुर्भागश्चतुर्भागद्वयादणुः ।
अणुद्वयाद्द्रुतः प्रोक्तस्तद्द्वयेन लघुर्भवेत् ॥ १४ ॥
लघुद्वयाद्गुरुः प्रोक्तस्त्रिलघुः प्लुत उच्यते ।
एवं कालगतिः प्रोक्ता तालज्ञैः पूर्वसूरिभिः ॥ १५ ॥

इति कालः

अथ मार्गाः

मार्गाः स्युस्तत्र चत्वारो ध्रुवश्चित्रश्च वार्तिकः ।
दक्षिणश्चेति संगीतरत्नाकरमतं भवेत् ॥ १६ ॥

चूडामणौ

दक्षिणो वार्तिकश्चित्रो ध्रुवश्चित्रतरस्तथा ।
षष्ठश्चित्रतमश्चेति षण्मार्गाः शास्त्रसंमताः ॥ १७ ॥

मणिदर्पणे

मार्गा द्वादश विख्याता दक्षिणो वार्तिकस्तथा ।
चित्रो ध्रुवश्चित्रतरस्तथा चित्रतमो मतः ॥ १८ ॥
चतुर्भागस्त्रुटिश्चैवानुत्रुटिर्घर्षणस्तथा ।
अनुघर्षणकश्चेति स्वरश्च षडिमे पुनः ॥ १९ ॥

इति मार्गाः

अथ क्रिया

निःशब्दा शब्दयुक्ता च क्रिया तु द्विविधा मता ।
निःशब्दा तु कला प्रोक्ता चतुर्धा सा प्रकीर्तिता ॥ २० ॥

आवापश्चाथ निष्कामो विक्षेपश्च प्रवेशकः ।
निःशब्देति चतुर्धोक्ता सशब्दापि चतुर्विधा ॥ २१ ॥
ध्रुवः शंपा तथा तालः संनिपात इतीरिता ।
पातः कला च सा ज्ञेया तासां लक्ष्माभिधीयते ॥ २२ ॥
आवापस्तत्र हस्तस्योत्तानस्यांगुलिकुंचनम् ।
निष्कामोधस्तलस्य स्यादंगुलीनां प्रसारणम् ॥ २३ ॥
क्षेपो दक्षिणपार्श्वस्योत्तानस्य प्रसृतांगुलेः ।
विक्षेपोधस्तलस्यास्य प्रवेशोंगुलिधूननम् ॥ २४ ॥
ध्रुवो हस्तस्य पातः स्याच्छोटिकाशब्दपूर्वकः ।
शंपा दक्षिणहस्तस्य तालो वामकरस्य तु ॥
उभयोः सन्निपातः स्यात्तासां मार्गवशान्मितिः ॥ २५ ॥

इति क्रिया

अथांगानि

अनुद्रुतो द्रुतश्चाथ दविरामो लघुस्तथा ।
लविरामो गुरुश्चैव प्लुतश्चेति यथाक्रमम् ॥ २६ ॥
सप्तांगानीह तालेषु ज्ञातव्यानि सदा बुधैः ।
अण्वाद्याद्यक्षरैर्ज्ञेयं संति संज्ञांतराण्यपि ॥ २७ ॥
अनुद्रुतेणुः करजमर्धचंद्रोंकुशं धनुः ।
अर्धमात्रं व्यंजनं खं बिंदुश्च वलयं द्रुते ॥ २८ ॥
व्यापकः सरलो ह्रस्वः शरो दंडो लघुः स्मृतः ।
दीर्घो वक्रो द्विमात्रो गोजीवः पूज्यो भवेद्गुरुः ॥ २९ ॥
त्र्यंगस्त्रिमात्रको दीप्तः शृंगी सामोद्भवः प्लुतः ।
अणौ चंद्रो द्रुते शंभुर्दविरामे षडाननः ॥ ३० ॥
लघौ देवी दविरामे जीवो गौरीपतिर्गुरौ ।
प्लुते त्रयो विरिंच्याद्या देवता मुनिभिः स्मृताः ॥ ३१ ॥
एकमात्रो लघुः प्रोक्तो द्विमात्रो गुरुरुच्यते ।
त्रिमात्रः प्लुत उद्दिष्टो मात्रार्धं तु द्रुतो मतः ॥ ३२ ॥

अनुद्रुतश्चतुर्थांशो मात्राया इति संस्मृतम् ।
पंचलघ्वक्षरोच्चारमिता मात्रास्ति मार्गके ॥ ३३ ॥
चतुर्भिरक्षरैर्देशी षड्भिरप्यक्षरैः कचित् ।
अनया मात्रया ज्ञेया लघुगुर्वादिकल्पना ॥ ३४ ॥
अत्यल्पघातेऽणुर्ज्ञेयः सूक्ष्मघाते द्रुतो मतः ।
पूर्णघाते लघुः प्रोक्तो घातात्क्षेपे गुरुर्मतः ॥ ३५ ॥
घातात्करभ्रमो यत्र प्लुतो ज्ञेयो विचक्षणैः ।
अर्धचंद्रस्वरूपोणुर्द्रुतः स्याद्वलयाकृतिः ॥ ३६ ॥
दविरामो द्रुते रेखा लघुस्तु सरलाकृतिः ।
लविरामो लघौ रेखा गुरुर्वक्रः प्लुतस्त्रिकम् ॥ ३७ ॥
गुरौ रेखेति चिह्नानि लिप्यामुक्तानि सूरिभिः ।
द्रुते विरामोणुर्ज्ञेयो विरामस्तु द्रुतो लघौ ॥ ३८ ॥
तित्तिरिश्चटकश्चैव बकचातककोकिलाः ।
वायसः कुक्कुटश्चैव क्रमादुच्चारयंत्यमून् ॥ ३९ ॥

इत्यंगानि

अथ ग्रहाः

समोतीतोऽनागतश्च विषमश्च चतुर्विधः ।
ग्रहस्तालेषु विज्ञेयः सूक्ष्मदृष्ट्या विचक्षणैः ॥ ४० ॥
गीतादिसमकालस्तु समपाणिः समग्रहः ।
गीतादौ विहिते यश्च तालवृत्तिर्विधीयते ॥ ४१ ॥
अतीताख्यो ग्रहो ज्ञेयः सोवपाणिरिति स्मृतः ।
पूर्वं तालप्रवृत्तिः स्यात्पश्चाद्गीतादिरुच्यते ॥ ४२ ॥
अनागतः स विज्ञेयः स एवोपरिपाणिकः ।
आद्यंतयोरनियमे विषमग्रह उच्यते ॥ ४३ ॥
तालो वितालोनुतालः प्रतितालश्चतुर्विधः ।

समग्रहो भवेत्तालो वितालोतीतकः स्मृतः ।
अनागतोनुतालः स्याद्विषमः प्रतितालकः ॥ ४४ ॥

इति ग्रहाः

अथ जातयः

चतुरस्रस्तथा त्र्यस्रः खंडो मिश्रस्तथैव च ।
संकीर्ण इति विज्ञेया जातयः क्रमशो बुधैः ॥ ४५ ॥
तथैव मात्रा विज्ञेयाः क्रमशस्तालवेदिभिः ।
द्विगुणत्रिगुणाद्यत्र लक्ष्यदृष्ट्या सुसंमतम् ॥ ४६ ॥
चतुर्वर्णैस्त्रिभिर्वर्णैः पंचवर्णैस्तथैव च ।
सप्तवर्णैश्च नवभिर्जातयः क्रमशः स्मृताः ॥ ४७ ॥
चतुरस्रो ब्राह्मणः स्यात्र्यस्रः क्षत्रिय एव च ।
खंडो वैश्यस्तथा मिश्रः शूद्र इत्यभिधीयते ॥ ४८ ॥
संकीर्णजातिः संकीर्ण इत्येताः पंच जातयः ।

इति जातयः

अथ कलाः

ध्रुवका सर्पिणी कृष्णा पद्मिनी च विसर्जिता ।
विक्षिप्तका पताका च कला स्यात्पतिताष्टमी ॥ ४९ ॥
सशब्दा तु ध्रुवा ज्ञेया सर्पिणी वामगामिनी ।
कृष्णा दक्षिणतो गंत्री पद्मिनी स्यादधोगता ॥ ५० ॥
विसर्जिता बहिर्याता विक्षिप्ताकुंचनात्मिका ।
पताका तूर्ध्वगमनात्पतिता करपातनात् ॥ ५१ ॥
ध्रुवपाते प्रयोज्यास्ता नावापादौ कदाचन ।
लघौ तु ध्रुवका ज्ञेया ध्रुवका पतिता गुरौ ॥ ५२ ॥
ध्रुवका सर्पिणी कृष्णास्तिस्र एताः प्लुते मताः ।
तत्र मार्गप्रभेदेन कलाभेदान्प्रचक्ष्महे ॥ ५३ ॥
तदर्धार्धप्रभेदेन शास्त्रतः संप्रदायतः ।
ध्रुवका पतिता चित्रे वार्तिके त्वादिमे उभे ॥ ५४ ॥

अंत्ये द्वे च प्रयोक्तव्ये क्रमादष्टौ च दक्षिणे ।
ध्रुवेत्वेकैव ध्रुवका द्रुतश्चित्रतरे मतः ॥ ५५ ॥
अनुद्रुतश्चित्रतमे चतुर्भागे तदर्धकम् ।
त्रुटौ तदर्धभागः स्यातदर्धं स्यादनुत्रुटौ ॥ ५६ ॥
तदर्धं घर्षणे ज्ञेयं तदर्धं चानुघर्षणे ।
स्वरे तदर्धमेवं हि मार्गेषु स्यात्कलाक्रमः ॥ ५७ ॥

इति कलाः

अथ लयाः

क्रियानंतरविश्रांतिर्लयः स त्रिविधो मतः ।
द्रुतो मध्यो विलंबश्च द्रुतः शीघ्रतमो मतः ॥ ५८ ॥
द्विगुणद्विगुणौ ज्ञेयौ तस्मान्मध्यविलंबितौ ।
मार्गभेदाच्चिरक्षिप्रमध्यभावैरनेकधा ॥ ५९ ॥

इति लयाः

अथ यतयः

लयप्रवृत्तिनियमो यतिरित्यभिधीयते ।
समा स्रोतोवहा चैव मृदंगा च पिपीलिका ।
गोपुच्छा चेति विबुधैर्यतिः पंचविधोदिता ॥ ६० ॥
आदिमध्यावसानेषु लयैकत्वात्समैकधा ।
आदिमध्यावसानेषु लयत्रैध्यात्त्रिधा पराः ॥ ६१ ॥
चिरमध्यद्रुतलयैर्युक्ता स्रोतोवहा मता ।
अन्या विलंबमध्याभ्यां मध्यद्रुतवती परा ॥ ६२ ॥
मृदंगा तु द्रुताद्यंता ज्ञेया मध्ये विलंबिता ।
तथैवान्या द्रुताद्यंता मध्ये मध्यलयान्विता ॥ ६३ ॥
परा मध्यद्रुताद्यंता तथा मध्ये विलंबिता ।
पिपीलिका तु कथिता मध्यद्रुतविलंबिता ॥ ६४ ॥
आद्यंतमध्या चैवान्या प्रोक्ता मध्ये द्रुतान्विता ।
मध्ये मध्यान्विताद्यंतविलंबितलया परा ॥ ६५ ॥

द्रुतमध्यविलंबैः स्याद्गोपुच्छा द्रुतमध्यभाक् ।
द्वितीयान्या भवेन्मध्यविलंबितलयान्विता ॥ ६६ ॥

इति यतयः

अथ प्रस्तारः

न्यस्याल्पमाद्यान्महतोधस्ताच्छेषं यथोपरि ।
प्रागूने वामसंस्थांस्तु संभवे महतो लिखेत् ॥ ६७ ॥

अल्पानसंभवे तालपूर्त्यै भूयोप्ययं विधिः ।
सर्वाण्यवधिरालेख्यः प्रस्तारोयं द्रुते लघौ ॥ ६८ ॥

गुरौ प्लुते समस्ते च व्यस्ते व्यस्ते त्वणौ न सः ।
एवं तालस्य विबुधैर्दश प्राणा निरूपिताः ॥ ६९ ॥

वीणावादनतत्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञश्चाप्रयासेन मोक्षमार्गं समश्नुते ॥ ७० ॥

अनेन भगवान् सीतारामचंद्रो गुणिप्रियः ।
प्रीयतां परमोदारः सर्वकामधुगीश्वरः ॥ ७१ ॥

श्रीसीतारामचंद्रार्पणमस्तु ।